राधिका—सखि ! नवमालिके । न खलु भवादृश्यो जानन्ति मर्म[1]व्यथां विषम सायक-सायक-पातस्य परन्त्वव[2] प्रेमकला पृच्छ्यताम् ।

प्रेम— गुरुजनभयं पातिव्रत्यं जनारवतो[4] भयम्
सहचरि ! अपि[5] बारंवारं त्रयं परिरक्षितुम् ।
श्लथयति परं मन्दं मन्दं विभो[6]रधरस्थलो-
विगलदमृताशंसो[7] वंशीनिनाद लवोदयः ॥१७॥

राधिका—( वंशीश्रवणमभिनीय प्रेमावस्थां नाटयति )।

प्रेम— इयं पुलकमण्डली-कवलिता कपोलस्थली
तथा सरसशीत्कृतिः स्फुरितमाननाम्भोरुहम्
अयं च कुचकाञ्चनाचलजनर्मघर्मोदयो
मुहुः सुमुखि ! वेपसे मदनहेति[8]भीतेव किम् ॥१८॥

राधिका—( नीवीसंयमन[9]मभिनयति )

नव—( सहासम् )
नीवीं नवीकृत्य नितम्बविम्बे, कियत् परिश्राम्यसि कोमलाङ्गि ।
पीताम्बरः पश्यति सस्मितं चेत्तदा भवित्री स्वयमेव बद्धा ॥१९॥

गुरुजनेति—हे सहचरि ! ( साहचर्याद्-प्रकाश्यमपि प्रकाशयामीति तात्पर्यम् ) गुरुजनभयम् । पातिव्रत्यम् जनारवतः लोकापवादतः भयम् । एतत् त्रयं परिरक्षितुं बारं बारं बहुवारं नैकशः अपे, परं विभोः श्रीकृष्णस्य अधरस्थलीतः विगलतः निःस्यन्दमानस्य अमृतस्य आशंसी वक्ता, वंशीनिनादस्य लवमात्र मुदयः मन्दं मन्दं ( तं संकल्पं ) श्लथयति शिथिलयति । वंशीध्वनिश्रवणमात्रेण पूर्वोदित-संकल्प मपहाय माधवमुपगन्तुमिच्छामीति भावः ॥१७॥

इयमिति—सुमुखि राधिके ! इयं दृश्यमाना कपोलस्थली ते गण्डस्थली पुलकमण्डल्या कवलिता परिपूर्णा, तथा सरसा रसावेशात् मधुरा शीत्कृतिः श्रूयते । अपि च आननाम्भोरुहं मुखपद्मं स्फुरितं कम्पितं ॥ अयं च कुचौ एव काञ्चनाचलौ स्वर्णपर्वतौ, ताभ्याम् जायते यः नर्मविषयकः कामक्रीड़ाप्रसङ्गी धर्मः स्वेदः तस्य उदयः वृद्धिः दृश्यते । अतएव मदनस्य हेतयः बाणाः तेभ्यः भीता इव वेपसे कम्पसे किम् ?

सर्वत्र सात्त्विकभावोदय एव हेतुः ॥१८॥

नीवीमिति :—हे कोमलाङ्गि ! नितम्बविम्बे कटिमण्डले कृष्णवंशी श्रवणमात्रेण उन्मुक्तां नीवीं वस्त्रग्रन्थीं नवीकृत्य नूतनतया वद्ध्वा कियत् कतिवारान् परिश्राम्यसि परिश्रान्ता भवसि । पुनः पुनर्वद्धापि नीवी शिथिली भवति । अतोऽत्र भूयान् ते परिश्रमः भवति । पीताम्बरः श्रीकृष्णः ( त्वाम् ) सस्मितं पश्यति चेत् तदा स्वयमेव श्रीकृष्णप्रेमपाशेन वद्धा आवद्धा भवित्री भविष्यति । अतो निष्फलस्ते नीवीवन्धनप्रयत्नः इति भावः ॥१९॥

---

| | | |
|---|---|---|
| 1. मम (क) | 2. तत्र (क) | 3. सर्वभ्रमादुक्तम् |
| 4. जनाननतो (c) | 5. मतं (c) | 6. विभो (c) |
| 7. शंसद (c) | 8. भीत (c) | 9. नीविकासंयमन (b) |

राधिका—( नवमालिकां विलोक्य सानन्दम् )

अहो मुरारे मुरलीनिनाद-
लीलायतानां परमूर्जितानि ।
भवादृशां येन महासतीनां
कपोलमूले पुलकावलीयम् ॥२०॥

नव—( सलज्जमधोमुखीभूय स्वगतम् )

गोपं कञ्चन काञ्चनाम्बरमये पश्यामि न श्यामलम्
यस्यालोकवशादृशा मृगदृशा मेषाविशेषादभूत् ।
इन्दुस्तिन्दुक पावको मलयजालेपोऽपि सन्तापकः
प्राणा एव निजद्विषो गुरुतरो हारोऽपि मारोपमः[1] ॥२१॥

अथवा—

विषमविशिखसूत्रं कृष्णवंशीनिनादो
यदवधि तरुणीनां कर्णपीठे लुलोठ ।
अविरल-पुलकाली कोमला गण्डपाली
तदवधि तनुतेसौ[2] भाग्यवध्यं निवद्यम् ॥२२॥

अहो इति :—अहो विस्मये, मुरारेः मुरलीनिनाद लीलायितानां मुरलीध्वनि लीलाचरणानां परं अत्यन्तं उर्जितानि प्रभावाः परमोत्कर्षा इति यावत् ( वर्त्तन्ते )। येन कारणेन भवादृशां महासतीनामिति सोल्लुण्ठनोक्तिः। कपोलमूले इयं पुलकावली जाता। वंशीनिनादश्रवणेन युष्माकमियमवस्था महासतीत्वमेव प्रकटयति, किं मम परिहासेन सर्वासां तु दशा समा इति भावः ॥२०॥

गोपमिति :—अये सखि ! यस्य आलोकवशात् दर्शनहेतुः मृगदृशां गोपनागरीणां विशेषात् विशिष्टतया एषा दशा कामकृता अभूत् ; तं प्रसिद्धं अनुभूतं वा कंचन अनिर्वचनीयं श्यामलं काञ्चनाम्बरं पीतवाससं गोपं गवां पशूनां रमणीचक्षुषां वा पातारं माधवं न पश्यामि ?

अपितु पश्यामीति काकुः। दशां स्पष्टयति—इन्दुः तिन्दुकपावकः वहुकालस्थायी सर्वाङ्गदाहकाश्च, न तु आनन्ददायकः। मलयजश्च हरिचन्दनस्य आलेपः अपि सन्तापकः न तु शीतस्पर्शः। प्राणा एव निजद्विषः निजशत्रुरूपाः न तु प्रियतमाः हारोऽपि मारोपमः, मारयतीति मारो मृत्युः, "मारौमृतौविषेऽनङ्गे" इति विश्वः। मृत्युवदप्रियतरः, गुरुतरश्च धारणाय। तथाच गीतगोविन्दे—"श्यामात्मा कुटिलः करोति कवरीभारोऽपि मारोद्यमम्" इति ॥२१॥

विषमेति—विषमविशिखस्य कामस्य अतिकठोरत्वात् व्याधस्वरूपस्य इत्यर्थः। सूत्रं पाशभूतं कृष्णवंशीनिनादः यदवधि यदारभ्य तरुणीनां गोपयुवतीनां कर्णपीठे लुलोठ पपात तदवधि तत्कालादेव कोमलागण्डपाली गण्डप्रदेशः गोपतरुणीनामिति शेषः, न विरला पुलकानामाली यस्यां तादृशी सती

---

1 मारोपमः (ग)  2 असौ (ग)

( नेपथ्ये )

देवतामुकुटकान्तिमञ्जरी-पिञ्जरीकृत पदाम्बुजद्वयम्
मारकातरितगोपनागरी-रागरीतिरसिकं भजेमहः ॥२३॥

प्रेम—कथं चित्रफलकहस्तो रसालक इत एव आयाति ।

( ततः प्रविशति यथानिर्द्दिष्टो रसालकः )

धामनि स्फुटितहार दामनि नीलनीरदसमानधामनि ।
वामनीकृतकुचान्त[1] कामिनी कामनीतिरसिके रसामहे ॥२४॥

राधिका—इदमनर्थं[2] कन्दलीमूलं यत् खलु रसालहस्ते चित्रफलकम् ।

नव—सखि ! त्वमेवमङ्कुरयसि, मया प्रागेवोक्तम् नेदं वकुलमालिकाहस्ते-दीयतामिति ।

प्रेम—सखि राधिके । तया खलु चञ्चलतया कुत्र[3] पातितम् तत् खलु अनेन वटुना समानीतम् ; तत् कथय[4] कथमुपायैर्गृह्यतामिति ॥

राधिका—इदमेव तावत् चिन्तयामि । न पुनः कदाचित्[5] गोविन्दकरारविन्द-मकरन्दरसनिष्यन्दाभिषिक्तं[6] भवेत् ।

निवद्यं श्लाघनीयं सौभाग्यवन्धं सुभगस्य भावः सौभाग्यं तस्य वन्धं दृढ़तां दृढ़सौन्दर्यरचनां च तनुते विस्तारयति । अत्र गण्डपाली वन्धन कर्त्री वंशीनादः वन्धनसाधनं सूत्रम्, सौभाग्यमेव वन्धनयोग्यं वस्तु । श्रीकृष्णवंशीनाद-श्रवणात् पुलकोपचयशोभिता गोपतरुणीनां गण्डस्थली तासां सौभाग्यं सौन्दर्यं च समधिकं रञ्जितं द्योतयामास इति तात्पर्यम् ॥२२॥

देवतेति—देवतानां मुकुटानां याः कान्तयः ता एव मञ्जर्यः ताभिः पिञ्जरीकृतं रञ्जितं चरणप्रणामेनेत्याशयः पदाम्बुजद्वयं यस्य तत् मारेण कन्दर्पेण कातरिताः या गोपनागर्यस्तासां रागरीत्या अनुरागरीतौ रसिकं अतीव आव्यही महः ब्रह्मज्योतिः भजे ॥२३॥

धामनीति—फुटितं हारस्य दाम यस्मिन् तादृशे, नोलनीरदस्य समानं धाम तेजः ( ज्योतिः ) यस्य तस्मिन्, वामनीकृताः निपीडनेन खर्वीकृताः कुचान्ताः कुचाग्रभागाः यासां तासां कामिनीनां कामकला कुशलानां कामनीतौ रतिपद्धतौ यः रसिक तस्मिन् अलौकिकगुणशालिनि धामनी श्रीकृष्णास्ये महसि रसामहे ॥२४॥

अङ्कुरयसि—अङ्कुरितं करोषि ।

---

1. कुचान्त (c)
2. आनन्दकन्दली (c) अनथकन्दलो (b)
3. कुत्रापि
4. कथय इति पाठो नास्ति (b.c.)
5. कथंचित् (a)
6. भिमूतं (a)

नव—निश्चयार्थे किमिति शङ्कसे ?

राधिका—फलेनैव निश्चीयते ।

रसालकः—( प्रविश्य ) स्वस्ति भवतीभ्यः । इति चित्रफलकं समर्पयति ।

( सर्वा विलोक्य पठन्ति )

त्वं तावत् प्रथमेव[1] चन्द्रकलिका सन्तप्तचिन्तामणि-
र्नव्याः केऽपि वयं निकामतरला श्चौराश्चकोरा इव ।
भूयो वीर्य-परीक्षये वितनुते सन्ताप मन्तर्जनि-
र्नो जाने तव कोमलाङ्गि ! गलितो येनैष चित्तज्वरः ॥२५॥

( सर्वा अन्योऽन्यम् ) सखि ! त्वदर्थमेव मुरारिरुपश्लोकितम् ( इति कलहायन्ते )

प्रेम—( अपवाय )

पादौ नूपुरपूरितौ कटितटौ पीताम्बरालम्बिनौ,
वक्षः कुङ्कमपङ्किलं करतलं वंशी वतंशी कृतम् ।
विम्बोष्ठौ[2]मदविभ्रम[3]स्मित[4]परौ केशोऽपि वेशाचितो
नो विद्मो नवनीलनीरदवपुः कस्यास्तपस्याफलम् ॥२६॥

त्वमिति—हे कोमलाङ्गि ! त्वं प्रथमा चन्द्रकलिका इव प्रतिपच्चन्द्रकलावत् आह्लादिनी क्षीणा च तथा सन्तप्तानां अस्माकं, अन्यत्र तृषार्त्तानां चकोराणां च चिन्तामणिः परमचिन्तनीया असि, किम्वा सन्तप्तः अस्माकमनस्य नृददे । चिन्तामणिः यथा तादृश्यसि । वयं के पुनः नव्योः न तु प्रवीणाः चौराः न तु स्वीयाः, चकोरा इव निकामतरलाः अत्यन्तमुत्सुकाः, चकोरा हि चन्द्रकिरणं पिवन्तीति प्रसिद्धिः । भूयः वार वारं अन्तः मनसि जनिः जन्म यस्य तथोक्त कामः वोर्यपरीक्षये वलविनाशार्थं ( निमित्तार्थे सप्तमी—"सभाजने मे भुजमूद्ध् वाहु" रिति वत् ) सन्तापं वितनुते प्रकरोति । कामः वारं वारं सन्ताप्य माम् अतीव दुर्वलं करोतीत्यर्थः । किन्तु येन प्रकारेण तव एष चित्तज्वरः हृदयसन्तापः गलितः अपसृतः, नोजाने नैव जानामि । वयं निकामतरलाः, त्वं तु पाषाणहृदया इति भावः ॥२५॥

उपश्लोकितम्—प्रशंसितम् ।

पादाविति—यस्य पादौ नूपुराभ्यां पूरितौ कटितटौ पीताम्बरस्य आलम्बिनी, वक्षः कुङ्कुमेव पङ्किलं कर्दममयं कृतं, करतलं वंश्या वतंसीकृतं भूषितं ; विम्बवदोष्ठौ मदस्य मत्ततायाः विभ्रमः विलासः यस्मिन् तादृशं स्मितं मन्दहासः परं प्रधानो ययो तादृशौ । केशोऽपि वेशोचितः प्रसाधित । नवनीलनीरदवपुः नवमेघश्यामः स कृष्णः कस्याः सकलकामिनीजनललामभूतायाः तपस्याफलं नो विद्मः न जानीमः । श्रीकृष्णस्तु अनन्यसाधारण भाग्यलभ्य इति भावः । यस्याः कृतेऽयं श्लोको मुरारिणा विरचितः सैव धन्या उत्कृष्टतमं तपस्तया तप्तमिति तात्पर्यम् ॥२६॥

---

1. प्रथमैव (a)
2. विम्बोष्ठे (a)
3. मद्विभ्रमः (a)
4. स्मितपरः (a)

( नेपथ्ये )
राकाशीतमयूखसुन्दरमुखो विस्तारि-वक्षस्थलः
खेलत्केशरीमध्यमो मरकतश्रीचुम्बिदोर्डम्बरः ।
कन्दर्पादपि सुन्दरो मदगजश्रीगर्वसर्वंकषः
शेषांनैव मनोविनोदनकृते रम्याकृतिः श्रीपतिः ॥२७॥

प्रेम—( विलोक्य ) कथमेषा वकुलमालिका हृदये नीलोत्पलं मुहुर्दधाना सानन्दमित एवाभिवर्तते ।

( ततः प्रविशति यथानिर्दिष्टा वकुलमालिका )
रम्याधरः[1] स्फुरदधीरसुधासमुद्र-
माधुर्यचुम्बनकलामिव सूचयन्ती ।
चेतो मदीयमधुना मधुनाशनस्य
हा हन्त हन्त मुरली तरली करोति ॥२८॥

( विलोक्य ) कथमेषा राधिका सखीभ्यां रसालकेन च अनुगम्यमाना वकुलवीथिकापरिसर एव नित्यानुरागकलिकां विकाशयति । तदहमपि सखीं सम्भावयामि ।

राधा—( अपसृत्य ) सखि ! कथमेतदवतंस नीलोत्पलमतीव सम्भावयति ।

वकुलमालिका—रभसेन रहः परिच्युतं श्रुतिनीलोत्पलकोरकं मुरारेः ।
नयनाञ्चल नीतिनिर्जितं भृगुपातं वहतीव भूतलेऽस्मिन् ॥२८॥

राकेति—राकायाः पूर्णिमायाः शीतमयूखवत् सुन्दरं मुखं यस्य सः, पूर्णचन्द्राननः विस्तारि विस्तीर्णवक्षःस्थलं यस्य सः, खेलतः केशरिणः मध्यमः कटिभाग इव क्षीणः मध्यमो यस्य सः, मरकतस्य मणिविशेषस्य चुम्बनीति तादृशः दोर्डम्बरः वाहुविलासो यस्य तादृशः कन्दर्पादपि सुन्दरः, मदगजस्य श्रियः शोभायाः ( मन्थरगतिजनितायाः—इत्यर्थः हेतौः यः गर्वः तस्य सर्वंकषः विनाशकः , रम्याकृतिः श्रीपतिः केषां मनस विनोदकृते प्रीतिसम्पादनाय न, अपि तु सर्वेषां सुरनरादीनां आह्लादकः ॥२७॥

रम्याधर इति—रम्यः अधर एव स्फुरत् अधीरः उद्वेलः यः सुधासमुद्रः तस्य यत् माधुर्य्यं तस्य चुम्बनकलां चुम्बनकौशलं सूचयन्ति प्रकाशयन्तीव मधुनाशनस्य मधुरिपोः मुरली अधुना मदीयं चेतः हा तरलीकरोति हन्त, हन्त विषादातिशय्याद् द्विरुक्ति ॥२८॥

सम्भावयामि—सम्मानयामि ।

रभसेनेति—रभसेन त्वद्दर्शनव्यग्रतया रहः तेन अलक्षितं परिच्युतं मुरारेः श्रुतिनीलोत्पलकोरकं कर्णावतंसीकृतं नीलोत्पलकोरकं नयनाञ्चलस्य नीत्या चालनेन ( कटाक्षपातेन ) निर्जितं पराजितं सत् अस्मिन् भूतले भृगुपातं अतटप्रपातं वहति प्राप्नोति इव । वलवत हि पराजितो मनस्वी भृगुपातादिना प्राणत्यागं करोति इति व्यवहारः । अत्रैव कर्णावतंसे तादृशो व्यवहारः कवि प्रतिभयोत्प्रेक्ष्यते ॥२९॥

---

1 विम्बाधर (क)

( इति राधिकायाः कर्णे कथयति )

राधि—सखि ! जीवितास्मि कर्णावतंसनेव ।

नव—सखि ! सखिः कृष्णे नेति शेषः ।

( आकाशे )

प्रस्तावयन्ती कियद्‌भूतानि नान्दीव रासोत्सवनाटिकायाः ।
महामुनीनामपि मानसानि मुरारिवंशी विवशीकरोति ॥२०॥

( सर्वाः सानन्दं इदमित्थमेवेति मदनावस्थां नाटयन्ति )

रसालकः—( सपुलकमञ्जलिं बद्ध्वा )

परं ब्रह्म निराकारमवाङ्‌मनसगोचरम् ।
वल्लवीतरलापांग-पल्लवीकृतमाश्रये ॥२१॥

( विलोक्य )

गोपीमनोहरणनाटकसूत्रधारो
धारायमाण[1]मदनाशुगकान्दिशीकः ।
कन्दर्पदर्पहरमूर्त्तिरसौ मुरारि-
र्वृन्दावने मुरलिकां तरलीकरोति ॥२२॥

नवमालिका—पुरः प्रालेयांशुप्रतिभटमुखी प्रेमवसतिः
सतीनीवीवन्धस्थितिविघटनैकव्यसनिनी ।
समायान्ती वृन्दावनकुहरमानन्दरभसा-
दये केयं श्यामच्छविरमृतधारा परिणतिः ॥२३॥

प्रस्तावयतीति :—मुरारीवंशी रसोत्सव एव नाटिका तस्या नान्दीव ( नांदी यथा नाटकीयं वस्तु प्रस्तावयति तद्वत् वंशीरासोत्सवं सूचयति ) कियद्‌भूतानि अनन्यनाटकसाधारणानि प्रस्तावयन्ती सती महामुनीनां जितेन्द्रियाणामपि नारदादीनां मानसानि विवशीकरोति तरलीकरोति, का कथा त्वस्माकम् ॥२०॥

परमिति :—निराकारं आकारशून्यं, अवाङ्‌मनसगोचरं अकथनीयं अचिन्तनीयं च वल्लवीभिः गोपतरुणीभिः ( कर्त्तृभिः ) तरलैः चञ्चलैः अपांगैः पल्लवीकृतं प्रेमप्रफुल्लतां प्रापितं, अथवा वल्लवीनां तरलापांगानि पल्लवीकृतानि येन तत् परंब्रह्म श्रीकृष्णाख्यं ज्योतिः अहं आश्रये ॥२१॥

गोपीति :—गोपीनां मनोहराहरणनाटकस्य सूत्रधारः प्रधानप्रयोजकः, परमनट इति यावत्, धारायमाणाः अविरलाः सुतीक्ष्णाः ये मदनाशुगाः कामवाणाः तेषां कान्दिशीकः भृगः ( वेध्यः ), कन्दर्प-दर्पहरा मदनगर्वखर्वकारिणी मूर्त्तिः यस्य तादृशः, असौ मुरारिः वृन्दावने मुरलिकां वंशीं तरलीकरोति मधुरतानेन वादयति ॥२२॥

पुर इति :—अये सम्बोधने ; पुरः सम्मुखे प्रालेयांशोश्चन्द्रस्य प्रतिभटं सदृशं मुखं यस्यास्तथाविधा, प्रेम्णाः वसतिः आवासगृहं, सतीनामपि नीवीवन्धस्य स्थितेः विघटने मोक्षणविषये एक एव व्यसनिनी

---

1 व्याधायमान ( ग )

रसालकः—लतान्तरितो रासोत्सवं निभृतमवलोकयामीति (तथा कुर्वन् इव स्थितः)

( ततः प्रविशति यथानिर्दिष्टो माधवः )

माधव—कथमेता मदन्तिकमेव समायान्ति। तन्निमिषमात्रमेव धैर्य्यमवलम्बिष्ये।

( सर्वा माधवान्तिक मुपसर्पन्ति )

( राधिकां निर्वर्ण्य )

नीलांशुकालंकृत[1]पीवरोरूर्दरस्फुरन्कोमलवाहुमूला-

वतंसयन्ती सुमुखी विभाति सम्मोहविद्येव मनोभवस्य ॥२४॥

( ततः प्रेमकलां निर्वर्ण्य )

एषा प्रसूनाशुग चापयष्टिः[2]स्पष्टीकृता भ्रूलतिकापदेशात्

सिन्दूरविन्दुर्गुलिकेति[3]शंके पंकेरुहस्मेर दलायताक्ष्या[4] ॥२५॥

( वकुलमालिकामाश्रित्य विलोकयाम्यासां भावं निभृतमिति )

( तथा करोति )

राधि—कथमत्रैवान्तरितो[5]माधवः। ( सर्वा निरूपयन्ति )

राधि—( निपुणं निरूप्य )

नम्रीभूतसुरेन्द्रमौलिमुकुटप्राग्भारसम्भावितम्

गोपालीकुचकुम्भपालिविलसन् कस्तुरिका श्यामलम्।

दैवादेव कदम्बमूलमिलितं लक्ष्मीविलासास्पदम्

संप्राप्तं क्वनु हारीतं वतमया रत्नं चिरत्नं पुनः ॥२६॥

व्यापारिणी, का कथा वा असतीनाम्, अमृतधारायाः परिणतिः श्यामछविः श्यामलकान्तिः आनन्दरसभात आनन्देन त्वरया च वृन्दावनकुहरं वृन्दावनमध्यं संकेतकुञ्जम् इत्यर्थः। समायान्ती समागच्छन्ती इयं का अनिर्वचनीया कान्तिः दृश्यते ॥२३॥

नीलांशुकेति :—नीलांशुकेन अलंकृतौ पीवरौ पृथुलौ ऊरू यस्याः सा, दरस्फुरती कोमले वाहुमूले यस्याः तादृशी, ईषद्दृश्यमानकोमलवाहुमूलाः; वतंसयन्ती कृष्णस्य श्रुतिच्युतं नीलोत्पलं कर्णयोः कुर्वती सती सुमुखी राधिका मनोभवस्य सम्मोहविद्येव विभाति ॥२४॥

एषेति :—पंकेरुहस्य स्मेरदले विकशितदले इव आयते विस्तृते अक्षिणी यस्याः तथाविधया कमलदलदीर्घलोचनया अनया प्रेमकलया कत्र्या भ्रूलतिकापदेशात् भ्रूव्याजेन प्रसूनाशुगस्य कन्दर्पस्य चापयष्टिः धनुर्लता स्पष्टीकृता प्रकाशिता। अस्याः भ्रुवौ कुसुमवाणस्य धनुः, नेत्रोत्पलेच तस्य शरौ इति जानीमः। अस्या सिन्दूरविन्दुः नलिकास्वभूतायाः नासिकायाः मूलसंस्थापितसिन्दूरविन्दुः गुलिका इति शंके तर्कयामि ॥२५॥

नम्रीभूतेति :—नम्रीभूतस्य प्रणतस्य सुरेन्द्रस्य मौलौ यः मुकुटः तस्य प्राग्भारेण अग्रभागेन सन्पूजितम्, गोपालीनां गोपालपत्नीनां कुचकुम्भपालिषु कुचचतुष्पार्श्वे विलसन्ती या कस्तूरिका तया

1. चीनांशुकालंकृत ( क ) 2. प्रसूनायुध ( क ) 3. गुलिकेव ( ग )
4. अन्तर्हितो ( क ) 5. दलायताक्षयाः ( ग )

बकुल—( आत्मनं निर्वर्ण्य )

प्राणमात्रे[1] विगलिते न जीवन्ति क्वचिज्जनाः

विना प्राणाधिकमहं जीवामीति किमद्भुतम् ॥३७॥

( सर्वा वियोगावस्थां नाटयन्ति )

बिभ्रतश्चिबुकमंगुलिमुखैः[2] किंचिदञ्चितविकारशीत्कृतेः[3] ।

अर्द्धचुम्बनमहो मुरद्विषः प्राणमेव नुदति प्रतिक्षणम् ॥३८॥

नव— ( चन्द्रमसं विलोक्य )

नूतनारुणमयूखपावके लक्ष्म वल्लीघनधूमभूमनि ।

होमकुण्ड इव चन्द्रमण्डले संजुहोति युवतीजनं स्मरः ॥३९॥

प्रेम— इदमवधारयामि ।

तनुपूर्त्तिकृते मृगच्छलाद् विधुपीयूष तड़ागपाथसि ।

शशिशेखर-भालवह्निना दरदग्धः कुसुमेषुरंचति ॥४०॥

श्यामलं, लक्ष्म्याः विलासस्य आस्पदं, अतिदुर्लभं मनोज्ञश्चेत्यर्थः । दैवादेव भाग्यवलात्, न तु अस्मदीयगुणाकृष्टमनस्तया, कदम्बमूलमिलितं चिरलं पूरातनं शाश्वतं रत्नं मया अभागिन्या संप्राप्तं पुनः क्व अज्ञातस्थाने हारितं नु ( प्रश्ने ) वत ( खेदे ) ॥३६॥

प्राणमात्र इति :—प्राणमात्रे न तु तदधिके विगलिते निर्याते सति कचित् जनाः न जीवन्ति । प्राणाधिकंकृष्णं विना अहं किं जीवामि इति एतत् अद्भूतम् अतीव आश्चर्य्यजनकम् । श्रीकृष्णं विना नाहं जीवितुं शक्नोमीति भावः ॥३७॥

विभ्रत इति :—अंगुलिना मुखैः अग्रभागैः, चिबुकं अस्मदीयं विभ्रतः धारयतः किंचित् अनिर्वचनीयं यथा स्यात् तथा अञ्चितः प्राप्तः यो विकारः कामावेशः तेन जाता शीत्कृतिः यस्य तस्य, मुरद्विषः कृष्णस्य अर्द्ध चुम्बनं, लज्जावशात् मम विक्षिप्तमुखतया चुम्बनस्य पूर्णता न जातेत्याशयः प्रतिक्षणं क्षणमप्य-परित्यज्य स्मृतिपथमागत्य प्राणमेव प्राणान् नुदति व्यथयति ॥३८॥

नूतनेति :—नूतना अरुणा रक्तवर्णा मयूखाः किरणा एव पावकः वह्निर्यस्मिन् तत्र, लक्ष्मवल्लरेव घनधूमस्य भूमा वाहुल्यं यत्र तथाविधे होमकुण्डे इव चन्द्रमण्डले स्मरः तदख्यहोतृविशेषः युवतीजनं आज्यस्वरूपं जुहोति । चन्द्रमण्डलं होमकुण्डम्, तस्य किरणाः अग्निः, कलंको धूमः, स्मरः होताः, युवतीजनः हविरिति आरोपः ॥३९॥

तनुपूर्तीति :—कुसुमेषुः स्मरः शशिशेखरस्य शिवस्य भालवह्निना तृतीयनेत्रदहनेन दरदग्धः अर्द्धदग्धः सन् विधुरेव पीयूषतडागः अमृतसरोवरः तस्यपाथः जलं तस्मिन् तनुपुर्त्तिकृते अमृतसम्पर्केण हि क्षतांग मक्षतं भवति, तस्माद्धेतोः मृगच्छलात् मृगरूपेण अञ्चति गच्छति प्राप्नोतीत्यर्थः ॥४०॥

---

1. अपिगलिते ( क )  2. अञ्जलिमुखैः ( ख )  3. सीत्कृतः ( ख )

राधा— ( सवितर्कम् )

परिणाममुपैति सन्धिवर्जं रजनीनाथ सुराधिनाथदन्ती ।
अपि तत्र कलंकवल्लीदम्भान्मदधारागलितेति तस्य शंके ॥४१॥

प्रेम— गगनमिदमिदानीं याति कासारशोभां-
तदनुमुकुट[1] लक्ष्मीं तारकाः संक्षिपन्ति ।
अपि किरणमृणालीमूलकन्दोऽयमिन्दु-
स्तदिह खनति लक्ष्मच्छद्मनाकोऽपिकोलः ॥४२॥

नव— मदालसविलासिनी-दशनकान्ति-सन्तानकः
स्फुरद्दरहसच्छटाद्युतिविलासिवैहासिकः
चलत्तरल रोहिणीरमणमण्डलाडम्बरः
क्षरत्किरणमञ्जरी परिचयोऽयमुन्मिलति ॥४३॥

राधिका— ( पवनस्पर्शमभिनीय )
आन्दोलनोत्तरल-चन्दनवन्दनीयो
मन्दानिलो भवति तापकरः[1] किमेतत् ।
किम्वालिभर्गनयनाञ्चलवह्निरेखा
सदग्धपञ्चशरभूतविवर्त्तवातः ॥४४॥

परिणाममिति :—रजनीनाथः चन्द्र एव सुर धिनाथस्य दन्ती. ऐरावतः । सन्धिमपि त्यक्त्वा पूर्णतया परिणामं पूर्णतां उपैति, तत्र ऐरावतशरीरे कलङ्कवल्लिदम्भात् कलङ्कव्याजेन मदधारा अपि गलिता इति शंके तर्कयामि, नायं चन्द्रस्य कलङ्कः परं नैरावतस्य मद इति—निर्यासः ॥४१॥

गगनमिति :—इदं गगनं इदानीं कासारस्य सरोवरस्य शोभां याति प्राप्नोति, तत् गगनकासारं अनुलक्षीकृत्य तारकाः कुमुदलक्ष्मीं संक्षिपन्ति संगृह्णन्ति एकत्रीकुर्वन्ति, कुमुदवत् शोभन्ते इति भावः । अपि च अयं इन्दुः किरणा एव मृणाल्यः तासां मूलकन्दस्वरूपः इह गगनकासारे कोऽपि कोलः बराहः लक्ष्मच्छद्मना कलङ्कव्याजेन तत् कुमुदमूलं खनति ॥४२॥

मदालसेति :—मदेन यौवनोत्थेन अलसानां विलासिनीनां ( तनुवियोगिनीनां ) दशनकान्तेः उद्दीपकत्वादानन्दवाहुल्यात् सन्तानकः विस्तारकः, स्फुरन्ति प्रकाशमाना दरहसच्छटाया द्युतियेषु तेषां विलासिनां वैहासिकः विदूषकः । क्षरन्त्याः स्रवन्त्याः किरणमञ्जर्याः परिचयः यस्मात् तादृशः अयं चलन् तथा तरलः योऽसौ रोहिणीरमणः चन्द्रः तस्य मण्डलस्य आडम्बरः उन्मिलति उदेति । चलत्तरले-त्यादिना चन्द्रदर्शनेन सर्वेषां संयोगिनां चित्तस्य तारल्यं चाञ्चल्यं च भवति इति व्यज्यते ॥४३॥

आन्दोलनेति :—आन्दोलनात् अनिलचालनात् उत्तरलेन चञ्चलेन चन्दनेन चन्दनवृक्षेण वन्दनीयः महनीयः मन्दानिलः तापकरो भवति, एतत् किं—विचित्रमिति भावः, वा पक्षान्तरे, भर्गस्य महादेवस्य नयनाञ्चलस्य वह्निरेखया नयनाग्निना सन्दग्धः पञ्चशरः एव भूतः तस्य विवर्त्तः मण्डलाकारभ्रमणं तेववीतः वातरूपतां गतः किम् ? भूतस्य विवर्त्ताकारवातरूपेण भ्रमतां प्रसिद्धम् ॥४४॥

---

1 कुसुम ( ग ) 2. तरुणा ( ग ) 3. दाहकरः ( क )

सर्वा:— हंहो तमालकृतमालरसालसाल-
हिन्तालतालवकुलार्जुन मुख्यवृक्षाः ।
आवेदयन्तु नवनन्दकिशोरमार्गं
नेत्राञ्चलैः कुवलयैरिव पूजयामः ॥४५॥

प्रेम—( वंशीमुद्दिश्य सानुक्रोश[1]म् )
जाने तवैव वश्या मुरलि ! तपस्यापरं रचिता ।
एकाकिनी मुरारेश्चुम्बति विम्बाधरं यस्मात्[2] ॥४६॥

वकुल—( सकरुणमाकाशलक्ष्यमञ्जलिं वद्ध्वा )
आलोलकुन्तल[1]मुदञ्चितमन्दहासं
सीमन्तीनालककुलं नवघर्मपूरम्
दास्यामि जीवनमपि त्रिदशाधिनाथ !
यद्येकवारमपिते वदनं विलोके ॥४७॥

प्रेम— नयनान्तेन[2] जीवन्ति सन्तप्ता हरिणीदृशः ।
तत्रापि यदि कार्पण्यमहो तव दयालुता ॥४८॥

हंहो इति :—(सोद्वेगसम्बोधने) तमाल-कृतमाल-रसाल-साल-हिन्ताल-ताल-वकुलार्जुनाश्च ते मुख्या वृक्षा इति तत्सम्बुद्धौ, भवन्तः नवस्य नन्दकिशोरस्य मार्गं आवेदयन्तु । वयं पुनरवगताः तं मार्गं कुवलयैरिव कुवलयसदृशैः नेत्राञ्चलैः पूजयामः । तस्मिन् मार्गे माधवमवलोकयामः ॥४५॥

जाने इति :—हे मुरलि ! त्वयापरं अतिकठोरेण कर्मणा रचिता तपस्या वश्या वशीभूतेवाऽभिमत-फलप्रदा । यस्मात् मुरारेः विम्बाधरं एकाकिनी असपत्नं चुम्बति । माधवाधरं युवतिसाधारणालभ्यमिति वस्तु व्यज्यते ॥४६॥

आलोलेति :—आलोलः कुन्तलः यस्मिन् तत् उदञ्चितः प्रकाशितः मन्दहासः यस्मिन् तत् सीमन्तिनं अलककुलं यस्मिन् तत्, नवः धर्मस्य पूरः यस्मिन्, (सात्त्विकोदयात्) तादृशं ते वदनं यदि एकवारमपि विलोके पश्यामि न तु चुम्बामि तदा जीवनमपि दास्यामि, त्वदधीनं करिष्यामि उपढौकन-रूपेणेति भावः ॥४७॥

नयनेति :—सम्यकरूपेण (स्मरशरेण) तप्ताः ज्वालिताः म्रियमाणा इति यावत्, हरिणीनां दृश इव दृशो यासां ताः अवलाः नयनान्तेन कटाक्षेण दृष्टिपातमात्रेण जीवन्ति, नयनान्तस्य (शरीरगतक्षुद्र-तमांशैकभागत्वात् दानस्य क्षुद्रता), तत्रापि दृष्टिपातमात्रे यदि कार्पण्यं तर्हि अहो विस्मये) तव दयालुता जगद्विरला अत्र लक्षणालक्षणया तव निर्दयता जगति विरलेति गम्यते ॥४८॥

---

1. सानुराग (ग)
2. येन (ख)
3. कुण्डल (ग)
4. कटाक्षेणापि (ग)

नव— कृपाकटाक्षैः करुणाम्बुराशे
यदीक्षसे मां जगदीश ! नैव ।
विलोचनाब्जे किमु योगनिद्रा
जहाति नाद्यापि मदीयपापैः ॥४९॥

सर्वाः—( साञ्जलिबन्धम् )
विद्मो न परं किञ्चित् मुरलीतरलीकृत वदनात् ।
किञ्चिदुदञ्चितहसितादसिताकृति बल्लवीतनयात् ॥५०॥

किंच—
आकुलीकुरुषे हन्त किमेवं निजदासिकाः ।
अथवा नाथ ! निर्बन्धः स्त्रीवधे फलमस्ति किम् ॥५१॥

( नेपथ्ये )
अयमेति मन्दमरविन्दलोचना-
जनलोचनाञ्चल-चकोरचन्द्रमा ।
परिवीतपीतवसनो मदालसो
दरहास भासुरमुखो जगत्पतिः ॥५२॥

सर्वाः—( स्वागतम् )
जगतामुपकाराय त्रिलोचन-विलोचनः
येनैव पञ्चवाणोऽपि रूपवानभिरूपितः ॥५३॥

कृपेति :—करुणारूपाम्बुनः राशे हे जगदीश ! यत् यस्मात् मां त्वदेकशरणां कृपाकटाक्षैः अकिंचित्करैः न ईक्षसे एव, दर्शनमात्रं न ददासि, तेन मन्ये, योगनिद्रा ( प्रलयकाले संसारं संहृत्य शायितवान् ) सा निद्रा मदीयपापै र्हेतुभिः विलोचने एव अब्जे कर्मभूते अद्यापि न जहाति किमु । योगनिद्रा वशात् तव लोचनेऽद्यापि मुद्रिते एव ॥४९॥

विद्मो इति । मुरल्या ( गानवशात् ) तरलीकृतं तरलं वदनं येन तस्मात् किञ्चिदुदञ्चितं उद्भिन्नं हसितं यस्य तस्मात् . असिताकृतिः कृष्णश्चासौ वल्लव्या यशोदायास्तनयश्चेति तस्मात् . श्रीकृष्णात् परं किञ्चित् स्वामिबन्धुगृहादिकं न विद्मः ॥५०॥

आकुलीति :—हे नाथ ! निजदासिकाः हन्त ( खेदे ) किं कस्मात् अकारणमेव आकुलीकुरुषे, अथवा ते एष निर्बन्धः आग्रहः, तर्हि स्त्रीवधे किं फलं अस्ति, किमपि नास्ति वीरत्वादिफलमिति भावः ॥५१॥

अयमिति :—अरविन्दलोचनाजनस्य पद्मलोचनायाः लोचनाञ्चलमेव चकोरः तं प्रति चन्द्रमाः. परिहितं पीतवसनं ये तादृशः मदेन यौवनमदेन अलसः मन्दगमनत्वात् . दरहासेन मन्दहासेन भासुरं कमनीयं मुखं यस्य, अयं जगत्पतिः मन्दं यथा स्यात् तथा इति ॥५२॥

जगतामिति :—येन कृष्णेन जगतां जगद्वासिनां जनानां उपकाराय त्रिलोचनेन विगतं लोचनं दर्शनं यस्य तादृशः अदृश्यतां गतः पञ्चवाणः अपि एवं दृश्यमानेन स्वरूपेण रूपवान् अभिरूपितः ॥५३॥

आगच्छत, गच्छामः ( माधवान्तिक मुपसर्पन्ति )

रसा—अहमप्यात्मानं प्रकाशयामि । ( इति उपसर्पति )

माधव—किं वः प्रियं करवाणि ।

सर्वाः—किमतः परमस्ति प्रियम् ।

मरुत्खेलान्दोला[1]यित नलिनपत्रप्रणयिनो
सुधाधारासारव्यतिकरसमीचीनस्वना
जनानामानन्दं वहलयतु[2] गोविन्द ! भवतो
दृशोरेषा लीला नटनघटनानां परिणतिः ॥५४॥

तथापीदमस्तु

कवीनामस्माकंगतहरिणपीयूषकिरण-
प्रभास्पर्द्धिवन्धाधिकमधुरवाचां परिचितिः ।
सतां भूयो भूयो वहतु वहलानन्दलहरी
परिवाहस्वेदद्रवजलधिकल्लोलकपटात् ॥५५॥

मरुतेति :—हे गोविन्द ! मरुतां खेलया आन्दोलितस्य नलिनपत्रस्य प्रणयिनी चलकमलदल-सदृशी, सुधानां धारा यस्मिन् तस्य आसारस्य अमृतवृष्टेः व्यतिकरः मिलनं तेन समीचीना युक्ता स्वना यस्याः तादृशी ( अमृतस्पर्शवत् दृष्टिपातेन हि अस्मद्विधा विरहिण्यो जीवन्ति गोष्ठीरूपकमपि द्वादश तादृशः ) भवतः दृशोः एषा लीलानटनस्य गोष्ठीपक्षे लीलायाः कृष्णलीलायाः नटनस्य या घटना तासां परिणतिः परिणामः जनानां आनन्दं वहलयतु पक्षे जनानां दृशोः आनन्दं ॥५४॥

भरतवाक्यम्

कवीनामिति—गतः हरिणः यस्मात् तस्य ( निष्कलंकस्य ) पीयूषकिरणस्य चन्द्रस्य प्रभायाः स्पर्द्धया वन्धेन लालित्यपूर्णरचनया पीयूषलहरी रूपकस्य च अधिकमधुरा माधुर्यगुणोपेता वाचः येषां तेषामस्माकं जयदेवादीनां कवीनां परिचितिः ( कविता ) सतां सामाजिकानां परीवाहः प्रस्रवन् यः स्वेदद्रवः एव जलधिः तस्य कल्लोलेनेव कपटं तस्मात् हेतोः, भूयो भूयो निरन्तरं वहलस्याऽनन्दस्य लहरी दर्शनेन सात्त्विकभावापन्नानां स्वेदोदयः, तत्कृतानन्दोदयश्च भवत्विति फलाशंसा ॥५५॥

---

1. विलोचनम् (ग) 2. विरचयतु (ग)
3. हेलाचलकमलमालाविधायिनी (क) हेलान्दोलायित (ख)

शुभमस्तु सर्वजगतां निरन्तरं
न रिपोरपि स्फुरतुवैपदं पदम् ।
जगदीश्वर कपटदारु विग्रहः
करुणाकटाक्षलहरीं विमुञ्चतु[1] ॥५६॥

इति श्रीजयदेवविरचितं पीयूषलहरी-नाम गोष्ठीरूपकं समाप्तम् ।

शुभमिति :—सर्वजगतां निरन्तरं नित्यकालमेव शुभमस्तु रिपोरपि वैपदं आपदवस्था न स्फुरतु । कपटेन दारुविग्रहः पुरुषोत्तमे जगन्नाथरूपः जगदीश्वरः करुणाकटाक्षलहरीं विमुञ्चतु कृपादृष्ट्या पश्यतु इति भावः ॥५६॥

— समाप्तम् —

---

7. विअमुति (क).

# JAYADEVA'S PĪYŪṢA-LAHARĪ

## AN ENGLISH TRANSLATION

May the artistic display of the energetic Tāndaba enlivened by the delicacy of the graceful movement of Parbati, when the couple are engaged in circling dance, always protect the world unfeignedly ; the artistic harmony of the graceful dance of Parbati ingratiating itself with the violence of Siva's Tāndaba has all the beauty of a lotus in full bloom tinged yellow by the cluster of its lustrous filaments, and also resembles a dense autumnal cloud lit up by flashes of lightning.

Also we make obeisance to the dazzlingly effulgent form (Krushna) who, amorously embraced by the youthful milkmaids in their ardent longing for a tender dance, with him as a partner for each one resembles a blue lotus kissed by trembling fresh blown Champaka flowers.

*After Nandi enters the stage.*

*Manager (Looking around) :* No further digression, no more words. This vernal season is very pleasant.

The breeze is blowing very gently making the trees tremulous. It is cool on account of its contact with the ripples formed by its movement on the surface of the Pampā lake. It is engaged in circling ringlets of dance in the cavity of the blooming jasmines and attracts the delighted swarms of bees to feed upon the blooming lotuses.

O the audience assembled through divine grace in the temple of the Great Lord who has the form of Garuḍa emblazoned on his banner, and who is to the devotees like the moon to the *chakora* birds and who is like the crest jewel Neelāchala, the blue mount.

That opera party of Jayadeva who is a jewel among scholars, is ready for a performance, their dance swift like lightning in its graceful movement, is capable of enrapturing the hearts (of all) ; the charm of their flowing movement is as pleasant and transparent as the halo of the moon, and they are as agreeable to the sight as the quick glances of ladies whose eyes resemble those of antelopes.

*(Looking at the green room)* O, there is a peculiar charm in the furnishings of our tiny family.

As for example: One lady is suddenly out of time making her tresses curl with her finger nails. Another is painting her breasts with white paste (*makari*). A third is artistically putting her bracelets on her arm, and the fourth one is refining the thin line of collyrium on the eyes.

Let me then call forth, stir up, stimulate the delights of the stage with the help of my assistant. Dear Srungaraka, (come) here, here please.

*(After entering) The assistant :* Sir, What say you? What's your pleasure?

*Stage Manager :* What's the use of that dramatic performance or of that love affair that does not captivate the (*khanjana*-like) hearts of the learned?

*Assistant :* What is that composition, which is so lovely with thoughts?

*Stage Manager :* The theatrical performance of the nature of the drama styled Gosthi is now displayed ; every letter of which is a feast to the ears like the few

piquant utterances of a lively-faced lady and an object of love to the eyes like the slightly heaving breasts (of woman) faintly visible through the playful movements of her garments and which is intoxicating like the moon-like face of the bride observed through the casement of a pleasure dome.

*Assistant (Inquisitively) :* Who is then the poet here?

*Stage Manager :* It is he by whom is stated the following: "In the fourteen worlds, only these two are competent to cause the stone to melt: I, known as Jayadeva—by means of my words, and the moon by the splendour of its rays."

*Assistant (Looking into the green room):* Then let the experts in the performance of the Gosthi be ready.

*Actors (In the green room):* Here, friend, here.

*Stage Manager (Looking):* Oh, how deep is the feeling of the actors that the auspicious performance starts really even without the music of the flute!

(*After musing*) This lotus-faced lady in front, I fancy, is the moon, and the other lady by her side is like the moon's consort 'Rohini'. Then let both of us play the roles of Madhava and Rasalak. [*Exeunt*

(*Here ends the prologue.*)

(*Then enter two female companions.*)

*The first one :* O, you of the beautiful eyes! See, whose soul Madhava with his attractive features will not fascinate (or captivate) by his melodies sung at the highest pitch attaining to the 'Pancham' note.

*The other one :* Friend Radhika, this is true, but only of persons like you ; for, Oh, beauteous one, in as much as your sighs, as if over-laden and charged with heat are coming out up to your very cheeks and your complexion is merged in paleness as if plunged in a sea of camphor and your creeper-like delicate body appears just like the last digit of the lack-lustre moon. (I ask) Has the beauty of the appearance of Nanda's son come within your sight?

*Radhika :* Friend Navamalika, what is it that you commence a description of me which is as impossible as painting the air?

*Nava :* The love of the lovely faced, though concealed at heart, is perceived by all, just as the flower even when covered by the creeper diffuses its fragrance all round.

*Radhika :* What is there to be concealed from you who are my second self? Whensoever Murari gently applies his lips to his sweet flute to fill it with gentle breath coming out of them, sighs heated from the love-lorn hearts of the lotus-eyed maidens spread a pallor on their lips. The copious flowing tune of the flute in Kedara-rāga is rather tolerable and even the tinkling of the golden anklets of the lotus-like feet is not so infatuating ; but Govinda breaks into hundred parts the hearts of persons of strong fortitude with his gentle smiles arching the round corners of his fatigued lips. (*After casting a very secret glance at Navamalika, she slightly nods her head. Then some one appearing without the dropping of the scene closes the eyes of Radhika.*)

*Radhika (Shrieking or crying aloud):* O Madhava, here is your Radhika as a female bee to wait upon your lotus-like feet, O, you of a lustful mind take out your palms from my tremulous eyes.

*The friend (Raising Radhika's chin) :* Such is the austerity of your chastity?

*Radhika* (*Abashing her look downwards*) : Friend, this has been uttered in mistake.

*Nava* : No, no friend, please admit that it is flurry of the mind (caused by love).

*Radhika* : No use speaking. In short, Madhava, who can fascinate the three worlds with his tresses decorated with the plumage of the peacock and with his complexion that has the lustre of a cluster or of the deep blue leaves of Tamala and with his ear-rings that play about his cheeks in unison with the graceful movement of the decoratives of his nose, and with cloth put on by him gracefully done into folds by a girdle round his waist is dearer to me than everything else, even than my entire life itself.

*Nava* : Friend Radhika, that Madhava is an object of love not only to you but also to all. Still it is proper for high born ladies to avoid the dreadful frantic play of the diabolical tongue of the wicked slanderer.

*Radhika* : Friend Navamalika, persons like you do not know indeed the anguish of heart caused by the arrows of the God of love. But Premakala may be asked regarding that.

*Premakala* : Oh, friend, I swear again and again to guard the three, reverence for superiors, chastity, and fear of rumour of the multitude. But the faintest tune of the flute indicating as it does a flow of nectar from the lower lip of the Lord (Madhava) slackens my resolution by degrees.

(*Radhika fancies herself to be hearing the flute and reveals herself struck with love.*)

*Prema* : This cheek has been devoured by horripilations, likewise this lotus-like face is throbbing on account of a pleasant shivering sensation, this perspiration engendered by love appearing on your breasts which resemble two golden hills. O Lovely-faced one, are you trembling again and again as if afraid of the missiles of Cupid?

(*Radhika represents herself as fastening the knot of her wearing garment.*)

*Nava* (*With laughter*) : To renew the knot of the wearing garment, O, delicate-limbed one, how much do you labour? If Pitambar Madhava looks smilingly at it, you will of yourself get fastened.

*Radhika* (*Looking at Navamalika delightfully*) : O, great be glory to the music played on the flute of Murari Madhava in as much as this has caused these thrills on the cheeks of exceedingly chaste ladies like you.

*Nava* (*Bashfully with her face downcast, aside*) : I do not find any dark complexioned cowherd, clad in golden garment as a consequence of whose sight, the condition of the fawn-eyed damsel becomes particularly such that to them the moon appears as the fire kindled with Tinduka-wood and even the sandal paste where applied gives a burning sensation and life itself becomes one's own enemy and the necklace becomes burdensome and deadly (a burden and even a messenger of death)

*Or*

Since the time when the tune of Madhava Krishna's flute, like the veritable attraction of Cupid, comes rolling out into the ears of damsels, these cheeks made tender by thick-set thrills testify their good fortune. (*In the green room*) I adore the Divinely Effulgent form who is enamoured of the love-lorn cowherd damsels (Gopis), with their characteristic ways of love, whose lotus-like feet are tinged yellow by contact with the cumulation of halo of the crowns of the gods. (*Bowing at His feet.*)

*Prema :* How is that Rasalalka with a picture board in his hand is coming this way?

(*Then enters Rasalaka as described.*)

We take delight in the effulgent form wherein glitters the necklace and the garland, whose grandeur is similar to that of a sable cloud and who has the happy knack of dwarfing the breasts of ladies in a tight amorous clasp, expert as he is in the method of dalliance.

*Radhika :* The picture-board (that is in the hands of Rasalaka) is the root of misfortune. Nava, you are putting forth its sprouts. I said beforehand that this should not be made over to thd hands of Vakulamalika.

*Prema :* Friend Radhika, Owing to her fickleness, it has been dropped somewhere by her. That has been brought by this Brahmin boy. Then tell me by what means it can be recovered.

*Radhika :* This is exactly what I am thinking of. May it not be again bathed in the honey flowing from the lotus-like hands of Govinda?

*Nava :* Why do you question a matter of certainty?

*Radhika :* It will be ascertained from the consequence.

*Rasalka* (*Entering*) : Good luck to you all. (*So saying—hands over the picture board.*)

(*All begin to read after looking.*)

You are the moon by whom Chintamani was distressed. We youthful gallants are extremely pining unsteady like the *Chakora* birds. This inborn fever of the heart is for the decay of our strength, and ever causes anguish. I do not know, Oh tender-limbed one, how this mental fever of yours has subsided. (*All addressing one another*) Oh, friends, this verse, the amatory effusion of Murari's heart is meant for you only. (*Thus they begin to quarrel.*)

*Prema* (*Aside*) : We do not know who will, as the fruit of her penance, have Him, whose appearance resembles that of a fresh blue cloud, whose feet have anklets tied to them and who has yellow flowing garments and whose armpits are coloured with red dye saffron and whose hands hold the flute and whose red smiling lips have the power of causing infatuation (in the beholder) and whose tresses are in keeping with His dress. (*In the green room*) Whom can Sripati, the beautiful, not please—Sripati who has a face just as beautiful as the full moon and a wide chest and a waist like that of a playful lion and whose arms possess the beauty of the emerald and who is more handsome than even Cupid and the grace of whose gait anguishes the pride of an intoxicated elephant. (*Looking*) How is it that this Vakulamalika comes this way cheerfully placing the blue lotus on her chest.

(*Then enters Vakulamalika as described.*)

Oh, alas, alas, the flute of Krishna is now making my heart unsteady indicating as it does the way to approach the sweetness of the unsteady or limpid ocean of liquid flow of nectar from his red Bimba-like lips. (*Looking*) How is it that this Radhika followed by her two friends and Rasalaka displays the sprout of her love in the vicinity of the row of the Vakula trees. Therefore I shall show respect to my friend.

*Radhika* (*Approaching*) : Why do you greatly esteem this blue lotus used as an ear-ornament?

*Vakula* : This bud of a blue lotus used as an ornament in the ear of Murari slipped through haste secretly and got as it were a fall from a precipice on the ground being vanquished by a side long look or glance. (*Thus she whispers into the ears of Radhika.*)

*Radhika* : Friend, I have verily been restored to life by this ear ornament.

*Nava* : Friend, friend and finally "by Krishna," (has been left out) (in the air). The flute of Murari overpowers the minds of even the great sages as it indicates some marvellous things of the drama of Rasa-festival like the benedictor prologue verse.

*All* (*delightfully*): This is so, this is so. (*All betrays love-strickenness.*)

*Rasalaka* (*Thrillingly with folded palms*) : I take refuge in the supreme formless soul, beyond the ken of mind and speech who is captivated by the tremulous glance of the milkmaids.

(*Looking*) Murari takes to the flute (*moves to and fro*) in Brindaban,---Murari, the stage-manager of the dramatic performance of attracting the hearts of the the milkmaids who are terrified by the overshooting arrows of Cupid and the delicacy of whose appearance deals a deathblow to the pride of Cupid.

*Nava* : Oh, who is this blue brilliance in front gladly coming into the heart of Brundaban as the highest perfection of the flow of nectar, with a face challenging the moon (in beauty) the abode of Love, the only one to take delight in relaxing the knots of the petticoats round the waists of chaste ladies.

*Rasalaka* : Concealed behind the creepers, I shall secretly witness the Rāsa Festival. (*She stands as if doing so.*)

(*Then enters Madhava as described*).

*Madhava* : How is it that all of them are coming to me? Then let me have patience for a moment only. (*All of them approach Madhava.*)

*Madhava* (*Perceiving Radhika*) : This fair-faced lady with her plump thighs adorned with blue garment and with her tender armpits slightly visible and wearing ear-ornaments appears like (an embodiment of) Cupid's science of enchantment. (*Then perceiving Premakala*). The eye-brows of this damsel are a clear display of pretexts for the bow of Cupid, the flower-arrowed god of Love. Methinks the vermillion dot (on the forehead) of this damsel, whose eyes are wide like the expanded petals of a lotus, is a gun-shot.

*Krishna* (*Resorting to the row of the Bakula trees*) : I shall secretly observe their emotions.

*Radhika* : How is that Madhava has disappeared here?

(*All of them ascertained attentively, Radhika ascertaining closely*). Where alas, have I lost the old jewel which I had luckily got? The jewel whom Indra even honours by bending low the forepart of the crown of his head and whose complexion has been rendered dark by being besmeared with the mark of Kasturi with which the breasts of milkmaids are anointed, and who is the veritable pleasure-abode of all the graces, and whom I, by the merest good fortune, found at the foot of the Kadamba tree.

*Vakulamalika (Looking at herself closely) :* Nowhere do people live when life passes away ; what a miracle is this that I still live, without him who is dearer (to me) than my life itself.

*(All display the condition of separation).*

*Radhika :* The (memory of the) half-printed kisses of Krishna while holding my chin with the tips of his fingers and of the whispering or half-uttered trepidations due to his rising (emotion) excitement is now, alas, tormenting my life every moment.

*Navamalika (Looking at the moon) :* Cupid makes an offering of a whole host of maidens to the moon's orbit which resembles an altar of sacrificial fire in which the fresh and reddish rays are like flames and where the spots resemble a dense mass of smoke.

*Prema :* Me-thinks: the flower-arrowed god half burnt by the fire arising out of the forehead of Shiva in the guise of dark spot which has the appearance of an antelope in the moon is now moving in the water of the nectar pool (of the moon) in order to replenish his burnt limbs.

*Radhika (Makes a guess) :* The moon while attaining his full development resembles the tusker of Indra. I think a line of ichor is oozing out from it in the guise of dark spots.

*Premakala :* The firmament now attains the grace of a lake. There the stars present the beauty of lilies. And the moon is root with its rays as the stalks and leaves. A boar in the guise of a dark spot is digging it.

*Nava :* This liquid splendour and the flowing beams of the tremulous and glittering disc of the moon (the Lord of Rohini) which looks like the mass of lustre of the teeth of wanton women languid with ardent passion and also like a jester sporting in the lustre of the glistening smiles of luxurious lords are now becoming manifest.

*Radhika (Representing herself as touched with the breeze) :* How is it, Oh friend, that the gentle breeze adored by the sandal trees trembling in agitation, causes burning or is it the whirlwind of the ghost of Cupid consumed by the flames issuing forth from the corner of Shiva's eye?

*All :* Oh, trees, among whom Tamala, Krutamala, Rasala, Sala, Hintala, Tala, Vakula and Arjuna are prominent, please tell us of the path of the very youthful son of Nanda. We shall adore (the path) with the blue lotuses of our glances.

*Prema (Hinting at the flute with pity and envy) :* Oh flute, I know you have practised that fruitful penance with strict austerity which enables you alone to kiss the Bimba-like red lips of Murari.

*Vakula (With folded palms, pathetically directed towards the sky) :* Oh, Lord of the gods, I shall sacrifice even my life if once I behold your face with the hair dishevelled, with smiles rising forth, with tresses scattered about and with dots of fresh perspiration.

*Prema :* The life of fawn-eyed woman in distress is sustained by our glances. If there is niggardliness in this matter, then fie in your generosity.

*Nava :* O, you ocean of mercy, O Lord of the World, if you do not cast on me a look of mercy then does the sleep of meditation not leave your lotus eyes even now owing to my sins.

*All* (*With palms folded*) : We do not know anything other than the dark featured son of the cowherdess whose face is tremulous with the flute and is beaming a mild display of smile. Alas, why do you thus embarras your own slaves? If Oh, Lord, you are persistent in this matter then what will you gain by slaughtering women? (*In the green room*) Here comes gently the Lord of the Universe radiant with a smile, languid with passion encompassed with yellow garment, like the moon to the *Chakora*-like glances of lotus-eyed ladies.

*All* (*To themselves*) : By whom for the benefit of the world even the five-arrowed god consumed by the eyes of Shiva was given a graceful form. Come, let us go. (*All approach Madhava*).

***Rasalaka :*** I too shall disclose myself (*so saying approaches*).

***Rasalaka :*** . What good shall I do to you?

*All :* Is there anything more gratifying? Since O Govinda, let this be the perfection of the artistic way in which you sportively dance your eyes (which resembles the lotus leaf, moved to and fro by the gentle play of the breeze and which have been formed by a happy blending of the quintessence of the showers of nectar) enhance plentifully the joy of the people. Yet let it be.

Let the acquaintance of the Good with the exceedingly charming composition of us, poets, the style of which challenges comparison with the beams of the spotless moon lead to a repeated formation of the waves of intense pleasure in the disguise of overflowing perspiration which are like the waves of an ocean.

Let there be unbroken prosperity in all the worlds. Let there be no calamity even to the enemies. Let the Lord of the Universe, in His guise of wooden image, send waves of merciful glances.

Here ends the drāma of the Gosthi type Baishnavamri by name
composed by Jayadeva.

---